सोऽपि न सम्भवति सामान्यवत्त्वादेस्सप्तम्यन्तपदोपस्थाप्यस्य हेतुत्वार्थकपञ्चमी प्रकृत्यर्थत्वाभावादिति केषाञ्चित्पूर्वपक्षं समाधातुमुपन्यस्यति। मूले हेतुग्रन्थे सामान्यवत्त्व इति। सामान्यवत्त्वस्य बाह्यकरणप्रत्यक्षत्वे विशेषणत्वाविशेषणत्वासम्भवेऽपि सप्तम्यन्तार्थस्य सामान्यवत्त्वसामानाधिकरण्यस्य तत्र विशेषणतया तादृशविशेषणावच्छिन्ने बाह्यकरणप्रत्यक्षत्वे हेतुत्वान्वयसम्भवान्नापार्थकतेत्याह—तन्नेति। सामान्यवत्त्वस्येति। सामान्यवत्त्वस्य बाह्यकरणप्रत्यक्षत्वे विशेषणीभवत्सामानाधिकरण्यप्रतियोगितयोपस्थापितावित्यर्थः। अथ सामानाधिकरण्ये सप्तम्या अननुशासनात्कथमेतत्, सतीत्यस्य वा कोऽर्थ इति चेन्न "यस्य च भावेन भावलक्षण" मिति सूत्रानुशिष्टसप्तम्याः गोषु दुह्यमानासु गत इत्यादौ यथा गोदोहनादिसमानकालीनत्वं गमनादौ बोध्यते तथा प्रकृतेऽपि समानदेशत्वप्रत्ययनात्। नच तादृशसप्तम्याः क्रियासमानकालीनत्ववत्क्रियासमानदेशत्वस्य कदाचित्क्रियायां न प्रत्यायनसम्भवः यस्य क्रियया अन्यस्य क्रिया लक्ष्यते विशेष्यते यद्वाचकपदसमभिव्याहृतकृदन्तपदोपस्थापितक्रिया समानकालीनत्वादिसम्बन्धेन क्रियान्तरविशेषणमिति यावत् तद्वाचकपदात्सप्तमीत्यर्थकत्वात्तादृशसूत्रस्य क्रियासमानकालीनत्वादौ क्रियान्तरविशेषणतया विवक्षिते तादृशसूत्रेण सप्तमीविधानात् सप्तमीप्रकृत्यर्थनिरूपितसामानाधिकरण्यादेरपरनामार्थविशेषणतया विशेषणे सप्तम्यनुशासनात्सामान्यवत्त्वसामानाधिकरण्यस्य प्रत्यक्षत्वे कुतो लाभ इति वाच्यम्। यथा गोषु दुह्यमानास्वागत इत्यादौ गोपदोत्तरसप्तम्यास्समभिव्याहृतक्रियादोहनरूपार्थः तत्र समभिव्याहृतकृदन्तार्थान्वितप्रकृत्यर्थस्य कर्मतानिरूपकत्वसम्बन्धेनान्वयः तस्याश्च समानकालीनत्वसम्बन्धेन क्रियान्तरेऽन्वय इति तत्र दुह्यमानगोकर्मकदोहनसमानकालीनत्वलाभस्तथा प्रकृतेऽपि शतृप्रकृत्यसिधातोराधारत्वमर्थः। अत्रास्ति घटक इत्यादावेतद्देशनिष्ठाधारताप्रतियोगी घट इत्यादिप्रतीतेः, अत्र चाधारत्वरूपक्रियायां सामान्यवत्त्वस्य प्रकृत्यर्थस्य प्रतियोगित्वसम्बन्धेनान्वयः आधारतायाः प्रत्यक्षत्वे समानदेशत्वसंबन्धेनान्वयः प्रत्यक्षत्वे सामान्यवत्त्वसामानाधिकरण्यलाभसम्भवात्। भावलक्षणमिति भावशब्दस्य धर्ममात्रपरत्वात्प्रत्यक्षत्वस्य क्रियात्वविरहेऽपि क्षतिविरहात्। सत इत्यस्याध्याहारेण वा प्रत्यक्षत्वसत्त्वे सामान्यवत्त्वसत्त्वस्य समानदेशतालाभेन सामञ्जस्यात्। कुत्रचित्समानकाली-

हेतावुक्ते कथमस्य गमकत्वमित्याकांक्षायां व्याप्तिपक्षधर्मतयोरुपदर्शनप्राप्तौ व्याप्तेः प्राथम्यात्तत्प्रदर्शनायोदाहरणम् । तत्रानुमितिहेतुलिङ्गपरामर्शपरवाक्यजन्यज्ञानजनकव्याप्यत्वाभिमतवन्निष्ठनियतव्यापकत्वाभिमतसम्बन्धबोधजनकशब्दत्वमुदाहरणत्वम् । सामान्यलक्षणे — साध्यसाधनसम्बन्धबोधजनकत्वम् । साध्यसाधनाभावसम्बन्धबोधजनकत्वञ्च विशेषलक्षणद्वयम् । न्यायावयवदृष्टान्तवचनमुदाहरणमिति तु न । दृष्टान्तप्रयोगस्य सामयिकत्वेनासार्वत्रिकत्वात् । यो यो धूमवान् सोऽग्निमानित्येव व्याप्तिः प्रतीतेः । नापि प्रकृतानुमितिहेतुलिङ्गपरामर्शपरवाक्यजन्यज्ञान विषयव्याप्त्युपनायकं वचनं तत् । उपनयातिव्याप्तेः अतएवोपनयाभिधानप्रयोजकजिज्ञासाजनकवाक्यमुदाहरणम् । एतदेवान्वयव्यतिरेकव्याप्तिविषयकत्वविशेषितं विशेषलक्षणद्वयमित्यन्ये अत्र च व्यभिचारवारणाय वीप्सामाहुः ॥ यत्र च सामानाधिकरण्यादेव व्याप्तिस्तत्र न वीप्सा ॥ केवलान्वयिन्यभेदानुमाने च वीप्सायामपि व्यभिचारता

नत्वं क्रियायास्सम्बन्धः कुत्रचित्समानदेशत्वमित्यत्र किं नियामकमिति चेत् । यत्र समभिव्याहृतकृत्प्रत्ययस्य वर्तमानत्वेऽपि तात्पर्ये तत्र समानकालीनत्वं यत्र च न तद्विवक्षणं तत्र समानदेशत्वं सम्बन्ध इति नियमात् । प्रकृते च वर्तमानत्वाविवक्षया समानदेशत्वलाभात् वर्तमानत्वाविवक्षायामपि विरोधिकालाविवक्षायां लटः साधुत्वात् यत्र चातीतत्वमनागतत्वं वा कृतौ विवक्षितं, दुग्धासु दोग्धव्यास्वित्यादौ तत्रोत्तरत्वं पूर्वत्वं वा सम्बन्ध इति दोहनोत्तरत्वादिकमेव प्रतीयते नतु समानकालीनत्वमित्यवधेयम् ।

ननूदाहरणे यत्पदद्विरुक्तिप्रयोजिकायाः महानसत्वमहानसान्यत्वादिना वक्तुर्यावत्साधनाधिकरणप्रत्यायनेच्छारूपवीप्सायाः किं प्रयोजनं न हि साधनस्य यावदधिकरणे साध्यसत्त्वज्ञानमनुमितिहेतुर्येन यत्पदे